॥ कर्पूरादिस्तोत्रम् ॥

ॐ

श्रीगुरवे नमः । ॐ नमः परमदेवतायै ॥

श्रीकर्पूरादिस्तोत्रम्

कर्पूरं मधमान्त्यस्वरपरिरहितं सेन्दुवामाक्षियुक्तं बीजं ते
मातरेतत्त्रिपुरहरवधु त्रिःकृतं ये जपन्ति ।
तेषां गद्यानि पद्यानि च मुकुहुहरादुल्लसन्त्येव वाचः
स्वच्छन्दं
ध्वान्तधाराधररुचिरुचिरे सर्वसिद्धिं गतानाम्॥ १॥

ईशान सेन्दुवामश्रवणपरिगतो बीजमन्यन्महेशि द्वन्द्वं ते
मन्दचेता यदि जपति जनो वारूमेकं कदाचित् ।
जित्वा वाचामधीशं धनमपि चिरं मोहयन्नम्बुजाक्षीवृन्दं
चन्द्रार्धचूडे प्रभवति स महाघोरबालावतंसे॥ २॥

ईशो वैश्वानरस्थः शशधरविलसद् वामनेत्रेण युक्तो बीजं ते
द्वन्द्वमन्यद् विगलितचिकुरे कालिके ये जपन्ति ।
द्वेष्टारं घ्नन्ति ते च त्रिभुवनमपि ते वश्यभावं नयन्ति
सृक्कद्वन्दास्रधाराद्वयधरवदने दक्षिणे त्र्यक्षरेति॥ ३॥

ऊर्ध्वे वामे कृपाणं करकमलतले छिन्नमुण्डं तथाधः सव्ये
चाभीर्वरं च त्रिजगदघहरे दक्षिणे कालिके च ।
जस्वैतन्नाम ये वा तव मनुविभवं भावयन्त्येतदम्ब तेषामष्टौ
करस्था: प्रकटितरदने  सिद्धयस्त्र्यम्बकस्य॥ ४॥

वर्गाद्यं वह्निसंस्थं विधुरतिललितं तत्त्रयं कूर्चयुग्मं
लज्जाद्वन्द्वं च पश्चात् स्मितमुखि तदधष्ठद्वयं योजयित्वा ।
मातर्ये ये जपन्ति स्मरहरमहिले भावयन्तः स्वरूपं ते
लक्ष्मीलास्यलीलाकमलदलदृशः कामरूपा भवन्ति॥ ५॥

प्रत्येकं वा द्वयं वा त्रयमपि च परं बीजमत्यन्तगुह्यं
त्वन्नाम्ना
योजयित्वा सकलमपि सदा भावयन्तो जपन्ति ।
तेषां नेत्रारविन्दे विहरति कमला वक्त्रशुभ्रांशुबिम्बे वाग्देवी
देवि मुण्डस्त्रगतिशयलसत्कण्ठि पीनस्तनाढ्ये॥ ६॥

गतासूनां बाहुप्रकरकृतकञ्चीपरिलसन्नितम्बां दिग्वस्त्रां
त्रिभुवनविधात्रीं त्रिणयनां ।
श्मशानस्ते तल्पे शवहृदि महाकालसुरतप्रयुक्तां त्वां
ध्यायन् जननि जडचेता अपि कविः ॥ ७॥

शिवाभिर्घोराभिः शवनिवहमुण्डास्थिकरैः परं संकीर्णायां
प्रकटितचितायां हरवधूम् ।प्रविष्टां ।
संतुष्टामुपरिसुरतेनातियुवतीं सदा त्वां ध्यायन्ति क्वचिदपि
च
न तेषां परिभवः ॥ ८॥

वदामस्ते किं वा जननि वयमुच्चैर्जडधियो न धाता नापीशो
हरिरपि न ते वेत्ति परमम् ।
तथापि त्वद्भक्तिर्मुखरयति चास्माकममिते तदेतत्क्षन्तव्यं न
खलु
पशुरोषः समुचितः ॥ ९॥

समन्तादापीनस्तनजघनधृघौवनवतीरतासक्तो नक्तं यदि
जपति
भक्तस्तव मनुम् ।
विवासास्त्वां ध्यायन् गलितचिकुरस्तस्य वशगाः समस्ताः
सिद्धौघा भुवि चिरतरं जीवति कविः ॥ १०॥

समाः सुस्थीभूतो जपति विपरीतां यदि सदा विचिन्त्य त्वां
ध्यायन्नतिशयमहाकालसुरताम् ।
तदा तस्य क्षोणीतलविहरमाणस्य विदुषः कराम्भोजे वश्या
पुरहस्वधू सिद्धिनिवहाः ॥ ११॥

प्रसूते संसारं जननि भवती पालयति च समस्तं क्षित्यादि
प्रलयसमये संहरति च ।
अतस्त्वं धातासि त्रिभुवनपतिः श्रीपतिरपि महेशोऽपि प्रायः
सकलमपि किं स्तौमि भवतीम् ॥ १२॥

अनेके सेवन्ते भवदधिकगीवार्णनिवहान् विमूढास्ते मातः किमपि
न
हि जानन्ति परमम् ।
समाराध्यामाद्यां हरिहरविरिञ्चादिविबुधैः प्रपन्नोऽस्मि
स्वैरं

रतिरससमहानन्दनिरताम् ॥ १३॥

धरत्रि कीलालं शुचिरपि समीरोऽपि गगनं त्वमेका कल्याणी
गिरिशरमणी कालि सकलम् ।
प्रसन्नां त्वं भूया भवमनु न भूयान्मम जनुः ॥ १४॥

श्मशानस्थः सुस्थो गलितचिकुरो दिक्पटधरः सहस्रं त्वकार्णां
निजगलितवीर्येण कुसुमम्  ।
जपंस्त्वत्प्रयेकं मनुमपि तव ध्यानिरतो महाकालि स्वैरं स
भवति धरित्रीपरिवृढः ॥ १५॥

गृहे संमार्ज्यन्या परिगलितविर्यं हि चिकुरं समूलं मध्याह्ने
वितरति चितायां कुजदिने ।
समुच्चार्य प्रमेणा मनुमपि सकृत्कालि सततं गजारूढो याति
क्षितिपरिवृढः सत्कविवरः ॥ १६॥

स्वपुष्पैराकीर्णं कुसुमधनुषो मन्दिरमहो पुरो ध्यायन्ध्यायन्
यदि जपति भक्तस्तव मनुम् ।
स गन्धर्वश्रेणीपतिरपि कवित्वामृतनदीनदीनः पर्यन्ते
परमपदलीनः प्रभवति ॥ १७॥

त्रिपञ्चारे पीठे शवशिवहृदि स्मेरवदनां
महाकालेनोच्चैर्मदनरसलावण्यनिरताम् ।
समासक्तो नक्तं स्वयमपि रतानन्दनिरतो जनो यो ध्यायेत्त्वामयि
जननि स स्यात् स्मरहरः ॥ १८॥

सलोमास्थि स्वैरं पललमपि मार्जारमसिते परं चोष्ट्रं
मैशं
नरमहिषयोश्छागमपि वा ।
बलिम् ते पूजायामयि वितरतां मर्त्यवसतां सतां सिद्धिः
सर्वा
प्रतिपदमपूर्वा प्रभवति ॥ १९॥

वशी लक्षं मन्त्रं प्रजपति हविष्याशनरतो दिवा
मातर्युष्मच्चरणयुगलध्याननिपुणः ।
परं नक्तं नग्नो निधुवनविनोदेन च मनुं जपेल्लक्षं स स्यात्
स्मरहरसमानः क्षितितले ॥ २०॥

इदं स्तोत्रं मातस्तव मनुसमुद्धारणजनुः स्वरूपाख्यं
पादाम्बुजयुगलपूजाविधियुतम् ।
निशार्धं वा पूजासमयमधि वा यस्तु पठति प्रलापस्तस्यापि
प्रसरति कवित्वामृतरसः ॥ २१॥

कुरङ्गाक्षीवृन्दं तमनुसरति प्रेमतरलं वशस्तस्य क्षोणीपतिरपि
कुबेरप्रतिनिधिः ।
रिपुः कारागारं कलयति च तं केलिकलया चिरं जीवन्मुक्तः
प्रभवति स भक्तः प्रतिजनुः ॥ २२॥

इति श्रीमन्महाकालिविरचितं श्रीमद्दक्षिणकालिकायाः
स्वरूपाख्यं स्तोत्रं समाप्तम्